# आङ्गिरसस्मृतिः

श्रीगणेशाय नमः

## अथादौ प्रायश्चित्तविधानवर्णनम्

गृहाश्रमेषु धर्मेषु वर्णानामनुपूर्वशः
प्रायश्चित्त विधिं दृष्ट्वा अङ्गिरामुनिरब्रवीत् १
अन्त्यानामपि सिद्धान्नं भक्षयित्वा द्विजातयः
चान्द्रं कृच्छ्रं तदर्द्धन्तु ब्रह्मक्षत्र विशां विदुः २
रजकश्चर्मकारश्च नटोवुरुड एव च
कैवर्त्तभेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ३
अन्त्यजानां गृहे तोयं भाण्डे पर्य्युषितञ्च यत्
प्रायश्चित्तं यदा पीतं तदेव हि समाचरेत् ४
चाण्डालकूपभाण्डेषु त्वज्ञानात्पिवते यदि
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विधीयते ५
चरेत् सान्तपनं विप्रः प्राजापत्यन्तु भूमिपः
तदर्द्धन्तु चरेद्वैश्यः पादं शूद्रेषु दापयेत् ६
अज्ञानात् पिवते तोयं ब्राह्मणस्त्वन्त्यजातिषु
अहोरात्रोषितोभूत्वा पञ्चगव्येन शुध्यति ७
विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कदाचन
आचान्त एव शुध्येत अङ्गिरामुनिरब्रवीत् ८
क्षत्रियेण यदा स्पृष्ट उच्छिष्टेन कदाचन
स्नानं जप्यन्तु कुर्वीत दिनस्यार्द्धेन शुध्यति ९
वैश्येन तु यदा स्पृष्टः शुना शूद्रेण वा द्विजः
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति १०
अनुच्छिष्टेन संस्पृष्टौ स्नानं येन विधीयते
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ११
अत ऊर्द्ध्वं प्रवक्ष्यामि नीली वस्त्रस्य वै विधिम्

स्त्रीणां क्रीडार्थसंयोगे शयनीये न दुष्यति १२
पालने विक्रये चैव तद्वृत्तेरूपजीवने
पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्व्यपोहति १३
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम्
वृथा तस्य महायज्ञा नीलीवस्त्रस्य धारणात् १४
नीलीरक्तं यदा वस्त्रमज्ञानेन तु धारयेत्
अहोरात्रोषितोभूत्वा पञ्चगव्येन शुध्यति १५
नीलीदारु यदा भिन्द्याद्ब्राह्मणं वै प्रमादतः
शोणितं दृश्यते यत्र द्विजश्चान्द्रायणञ्चरेत् १६
नीलीवृक्षेण पक्वन्तु अन्नमश्नाति चेद्द्विजः
आहार वमनं कृत्वा पञ्चगव्येन शुध्यति १७
भक्षन् प्रमादतोनीलीं द्विजातिस्त्व समाहितः
त्रिषु वर्णेषु सामान्यं चान्द्रायणमिति स्थितम् १८
नीलौरक्तेन वस्त्रेण यदन्नमुपनीयते
नोपतिष्ठति दातारं भोक्ता भुङ्क्ते तु किल्विषम् १९
नीलीरक्तेन वस्त्रेण यत्पाके श्रपितं भवेत्
तेन भुक्तेन विप्राणां दिनमेकमजोजनम् २०
मृते भर्त्तरि या नारी नीलीवस्त्रं प्रधारयेत्
भर्त्ता तु नरकं याति सा नारी तदनन्तरम् २१
नील्या चोपहते क्षेत्रे शस्यं यत्तु प्ररोहति
अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणं चरेत् २२
देवद्रोण्यां वृषोत्सर्गे यज्ञे दाने तथैव च
अत्र स्नानं न कर्त्तव्यं दूषिता च वसुन्धरा २३
वापिता यत्र नीली स्यात्तावद्भूम्य शुचिर्भवेत्
यावद्द्वादशवर्षाणि अतऊर्द्ध्वं शुचिर्भवेत् २४
भोजने चैव पाने च तथा चौषधभेषजैः

एवं म्रियन्ते या गावः पादमेकं समाचरेत् २५
घण्टाभरणदोषेण यत्र गौर्विनिपीड्यते
चरेदर्द्धं व्रतं तेषां भूषणार्थं हि तत् कृतम् २६
दमने दामने रोधे अवघाते च वैकृते
गवा प्रभवता घातैः पादोनं व्रतमाचरेत् २७
अङ्गुष्ठपर्वमात्रस्तु बाहुमात्रः प्रमाणतः
सपल्लवश्च साग्रश्च दण्डइत्यभिधीयते २८
दण्डादुक्ताद्यदान्येन पुरुषाः प्रहरन्ति गाम्
द्विगुणं गोब्रतं तेषां प्रायश्चित्तं विशोधनम् २९
शृङ्गभङ्गे त्वस्थिभङ्गे चर्मनिर्म्मोचने तथा
दशरात्रं चरेत् कृच्छ्रं यावत्स्वस्थोभवेत्तदा ३०
गोमूत्रेण तु संमिश्रं यावकञ्चोपजायते
एतदेव हितं कृच्छ्रमिदमाङ्गिरसं मतम् ३१
असमर्थस्य वालस्य पिता वा यदि वा गुरुः
यमुद्दिश्य चरेद्धर्मं पापं तस्य न विद्यते ३२
अशीतिर्यस्य वर्षाणि वालोवाप्यूनषोडशः
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च ३३
मूर्च्छिते पतिते चापि गवि यष्टिप्रहारिते
गायत्र्यष्टसहस्त्रन्तु प्रायश्चित्तं विशोधनम् ३४
स्नात्वा रजस्वला चैव चतुर्थेऽह्नि विशुध्यति
कुर्याद्रजसि निवृत्तेऽनिवृत्ते न कथञ्चन ३५
रोगेण यद्रजः स्त्रीणामत्यर्थं हि प्रवर्त्तते
अशुच्यन्ता न तेन स्युस्तासां वैकारिकं हि तत् ३६
साध्वाचारा न तावत्स्याद्रजो यावत्प्रवर्त्तते
वृत्ते रजसि गम्या स्त्री गृहकर्मणि चैन्द्रिये ३७
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी

तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ३८
रजस्वला यदा स्पृष्टा शुना शूद्रेण चैव हि
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ३९
द्वावेतावशुची स्यातां दम्पती शयनङ्गतौ
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ४०
गण्डूषं पादशौचञ्च न कुर्य्यात् कांस्यभाजने
भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ४१
रजसा शुध्यते नारी नदी वेगेन शुध्यति
भूमौ निःक्षिप्य षण्मासमत्यन्तोपहतं शुचि ४२
गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि तु
भस्मना दशभिः शुद्ध्येत् काकेनोपहते तथा ४३
शौचं सौवर्णरूप्याणां वायुनार्केन्दुरश्मिभिः ४४
रेतःस्पृष्टं शवस्पृष्टमाविकञ्च न दुष्यति
अद्भिर्मृदा च तन्मात्रं प्रक्षाल्य च विशुध्यति ४५
शुष्कमन्नमविप्रस्य भुक्त्वा सप्ताहमृच्छति
अन्नं व्यञ्जनसंयुक्तमर्द्धमासेन जीर्य्यति ४६
पयोदधि च मासेन षण्मासेन घृतं तथा
तैलं सवत्सरेणैव कोष्ठे जीर्य्यति वा नवा ४७
यो भुङ्क्ते हि च शूद्रान्नं मासमेकं निरन्तरम्
इह जन्मनि शूद्रत्वं मृतः श्वा चाभिजायते ४८
शूद्रान्नं शूद्रसस्पर्कः शूद्रेण च सहासनम्
शूद्राज्ज्ञानगमः कश्चिज्ज्वलन्तमपि पातयेत् ४९
अप्रणामे तु शूद्रेऽपि स्वस्ति यो वदति द्विजः
शूद्रोऽपि नरकं याति ब्राह्मणोऽपि तथैव च ५०
दशाहाच्छुध्यते विप्रो द्वादशाहेन भूमिपः
पाक्षिकं वैश्य एवाह शूद्रोमासेन शुध्यति ५१

अग्निहोत्री च यो विप्रः शूद्रान्नं चैव भोजयेत्
पञ्च तस्य प्रणश्यन्ति आत्मा वेदास्त्रयोऽग्नयः ५२
शूद्रान्नेन तु भुक्तेन यो द्विजो जनयेत्सुतान्
यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्त्तते ५३
शूद्रेण स्पृष्टमुच्छिष्टं प्रमादादथ पाणिना
तद्द्विजेभ्यो न दातव्यमापस्तम्बोऽब्रवीन्मुनिः ५४
ब्राह्मणस्य सदा भुङ्क्ते क्षत्रियस्य च पर्वसु
वैश्येष्वापत्सु भुञ्जीत न शूद्रेऽपि कदाचन ५५
ब्राह्मणान्ने दरिद्रत्वं क्षत्रियान्ने पशुस्तथा
वैश्यान्नेन तु शूद्रत्वं शूद्रान्ने नरकं ध्रुवम् ५६
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम्
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं ध्रुवम् ५७
दुष्कृतं हि मनुष्याणामन्नमाश्नित्य तिष्ठति
यो यस्यान्नं समश्नाति स तस्याश्नाति किल्विषम् ५८
सूतकेषु यदा विप्रो ब्रह्मचारी जितेन्द्रियः
पिवेत् पानीयमज्ञानाद्भुङ्क्ते अन्नं भक्तमथापिवा ५९
उत्तार्य्याचम्य उदकमवतीर्य्य उपस्पृशेत्
एवं हि समुदाचारो वरुणेनाभिमन्त्रितः ६०
अग्न्यागारे गवां गोष्ठे देवब्राह्मण सन्निधौ
आहारे जपकाले च पादुकानां विसर्जनम् ६१
पादुकासनमारूढोगेहात्पञ्चगृहं ब्रजेत्
छेदयेत्तस्य पादौ तु धार्मिकः पृथिवीपतिः ६२
अग्निहोत्री तपस्वी च श्रोत्रियो वेदपारगः
एते वै पादुकैर्य्यान्ति शेषान्दण्डेन ताडयेत् ६३
जन्मप्रभृतिसंस्कारे चूडान्ते भोजनं नवम्
असपिण्डेन भोक्तव्यं चूडस्यान्ते विशेषतः ६४

याचकान्नं नवश्राद्धमपि सूतकभोजनम्
नारीप्रथमगर्भेषु भुक्त्वा चान्द्रायणं चरेत् ६५
अन्यदत्ता तु या कन्या पुनरन्यस्य दीयते
तस्याश्चान्नं न भोक्तव्यं पुनर्भूःसा प्रगीयते ६६
पूर्वश्च स्त्रावितोयश्च गर्भोयश्चाप्यसंस्कृतः
द्वितीये गर्भसंस्कारस्तेन शुद्धिर्विधीयते ६७
राजाद्यैर्द्दशभिर्मासैर्यावत्तिष्ठति गुर्विणी
तावद्रत्ता विधातव्या पुनरन्योविधीयते ६८
भर्तृशासनमुल्लङ्घ्य या च स्त्री विप्रवर्त्तते
तस्याश्चैव न भोक्तव्यं विज्ञेया कामचारिणी ६९
अनपत्या तु या नारी नाश्नीयात्तद्गृहेऽपि वै
अथ भुङ्क्ते तु यो मोहात्पूयसं नरकं व्रजेत् ७०
स्त्रियाधनन्तु ये मोहादुपजीवन्ति बान्धवाः
स्त्रिया यानानि वासांसि ते पापा यान्त्यधोगतिम् ७१
राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्च्चसम्
सूतकेषु च यो भुङ्क्ते स भुङ्क्ते पृथिवी मलम् ७२

इत्यङ्गिरसा महर्षिणा प्रणीतं धर्मशास्त्रं समाप्तम्
समाप्ताचेयं आङ्गिरसस्मृतिः

Reference:
*Smṛti Sandarbha*, Vol. I, (Delhi: Nag, 1981), pp. 591ff.